॥ बाष्कलमन्त्रोपनिषत् सवृत्तिका ॥

अथ बाष्कलमन्त्रोपनिषत् ।
मेधातिथिं काण्वमिन्द्रो जहार द्या मेषभूयोपगतो विदानः ।
तमन्य इत्तमनं परिप्राट् पद एनं नियुयुजे परस्मिन् ॥ १॥

को ह स्मैष भवसि व्यवायो नावायो म इह शश्वदस्ति ।
सुशेवमिच्चङ्क्रमसि प्रपश्यन्नित्था न कश्चोरणमाचचक्षे ॥ २॥

नेमामस्पृक्षदिदुदस्यमानः को अद्धामूमभिचङ्क्रमीति ।
तदिच्छाधि यो असि सर्ववित्तमो न त्वाश्नवद्ब्रह्म रिषा मयस्वि ॥

इन्द्रो नृचक्षा वृषभस्तुराषाट् प्रसासहिस्तपसा मा विचक्षे ।
स इद्देवो ऋतमन्वयन्तं प्रभीमकर्मा तवसोऽपविद्धात् ॥ ४॥

कुहेव मावशमितो नयातै कुहेव ते चित्रतमप्रतिष्ठा ।
कुहाचिदेष स्वपिता पिता नो यो न वेद न हृतं हरन्तम् ॥ ५॥

प्रत्यङ्ङवाङ्प्राङितरौ च नेह नाहमेनाननुपतस्थिरद्धा ।
न मामिमे नूनमित्था पथो विदुर्ये मा न यन्ति मिथु चाकशानाः ॥ ६॥

परः स्मियानो अविवरस्य शूकं किं सीमिच्छरणं मन्यमानः ।
न ह त्वाहमप्रणीय स्वविष्ठामित्था जहामि शपमानमिन्नु ॥ ७॥

अहमस्मि जरितॄणामु दावा अहमाशिरमहमिदं दधग्वान् ।
अहं विश्वा भुवना विचक्षन्नहं देवानामासन्नवोऽदः ॥ ८॥

मम प्रतिष्ठा भुव आण्डकोशा वि चैमि सं च हि नु यो विरशपी ।
अहं न्वहिं पर्वते शिश्रियाणमुग्रो न्वहं तवसावस्युरद्धा ॥ ९॥

प्रवङ्क्षणा अभिदं पर्वतानां यत्सीमिन्द्रा अकरोदनीकैः।
को अद्धा वेद क इह प्रवोचत् को अश्नवदभिमातिं विजघ्नुषः ॥ १०॥

को मे अवो दाशुषो विष्वगूतीरित्था ददश्रे भुवनाधि विश्वा ।
रूपं रूपं जनुषा बोभवीमि मायाभिरेको अभिचाकशानः ॥ ११॥

विश्वं विचक्षे यमयन्नभीको नेशे मे कश्च महिमानमन्यः ।
अहं द्यावापृथिवी आततानो बिभर्मि धर्ममवसे जनानाम् ॥ १२॥

अहमु ह प्रवतिं यज्ञियामियां
अहं वेद भुवनस्य नाभिम् ।
आपिः पिता सूरहमस्य विष्वङ्
अहं दिव्या आन्तरिक्ष्यास्तुका वहम् ॥ १३॥

अहं वेदानामुत यज्ञानामहं छन्दसामविदं रयीणाम् ।
अहं पचामि सरसः परस्य यदिदेतीव सरिरस्य मध्ये ॥ १४॥

अहमिन्नु परमो जातवेदा यमध्वर्युरभिलोकं पृणैधीत् ।
यमन्वाह नभसो न पक्षी काष्ठा भिन्दन् गोभिरितोऽमुतश्च ॥ १५॥

अहमु यन्नपतता रथेन द्विषडारेण प्रधिनैकचक्रः ।
अहमिन्नु दिद्युतानो दिवे दिवे तन्वं पुपुष्यानमृतं वहामि ॥ १६॥

अहं दिश प्रदिश आदिशश्च विष्वक् पुनानः पर्येमि लोकम् ।
अहं विश्वा ओषधीर्गर्भ आधां याभिरिदं धिनुयुर्दाशुषः प्रजाः ॥ १७॥

अह चरामि भुवनस्य मध्ये पुनरुच्चावचं व्यश्नुवानः ।
यो मा वेद निहितं गुहा चित् स इदित्था शेभवीदाशयध्यै ॥ १८॥

अहं पञ्चधा दशधा चैकधा च सहस्रधा नैकधा चासमत्र ।
मया ततमितीदमश्नुते तदन्यथासद्यदि मे असद्विदुः ॥ १९॥

न मामश्नोति जरिता न कश्चन न मामश्नोति परि गोभिराभिः ।
न मेऽनाश्वानुत दाश्वानजग्रभीत् सर्व इन्मामुपयन्ति विश्वतः ॥ २०॥

क्व शरारुः क्व सृमरः क्व नूरणः सर्वमिदं त्वत्त्वदितो वहामि ।
यन्मदिमे बिभ्यति तन्म एकं ते मे अक्षन्नहमुताननुक्षम् ॥ २१॥

यत्तप्यथा बहुधा मे पुरा चित्तन्नु भुवेऽहमुरणो बोभुवे ।
ऋतस्य पन्थामसि हि प्रपन्नोऽयसे स मे सत्यमिदेकमेहि ॥ २२॥

अहं ज्योतिरहमृतं विनद्धिरहं जातं जनि जनिष्यमाणम् ।
अहं त्वमहमहं त्वमिन्नु त्वमहं चक्ष्व विचिकित्सीर्म ऋज्वा ॥ २३॥

विश्वशास्ता विधरणो विश्वरूपो रुद्रः प्रणीती तमनः प्रजापतिः ।
हंसो विशोको अजरः पुराण ऋतीयमानो अहमस्मि नाम ॥ २४॥

अहमस्मि जरिता सर्वतोमुखः पर्यारणः परमेष्ठी नृचक्षाः ।
अहं विष्वङ्ङहमस्मि प्रसत्वानहमेकोऽस्मि यदिदं नु किं च ॥ २५॥

इति बाष्कलमन्त्रोपनिषत् समाप्ता ।